

परम-पूज्य-परमसद्गुरु-श्रीगजाननमहाराज-श्री-चरणाः
(एतेषां प्रेरणया सोमयागानुष्ठानं महाराष्ट्र-संस्कृत-परिषद् च)

# शारदा

१ फाल्गुन १८९०
२० फेब्रुवारी १९६९

## ॥ सो म या गा नु ष्ठा न म् ॥

धर्मक्षेत्रे भारतवर्षे महाराष्ट्रभूमिः। महाराष्ट्रभूः पुण्यभूः। अत्र सतां श्रेष्ठाः ज्ञानदेव-तुकाराम-रामदासादयः इतिहासख्याताः। अस्याम् एव परंपरायां परमपूज्याः श्रीस्वामीसमर्थ‘श्री’चरणाः प्रज्ञापुर (अक्कलकोट) निवासिनः। तस्मिन् प्रज्ञापुर-पीठे संप्रति विजयन्तेतमां परम-सद्गुरु-परमपूज्य-श्रीगजाननमहाराज ‘श्री’चरणाः। असंख्याः तेषां भक्तोत्तमाः। भारतराष्ट्रे परराष्ट्रेषु च। ‘श्री’चरणैः कृपाप्रसादेन अनुगृहीतैः सर्वैः भक्तैः संस्थापिता श्रीसद्गुरु-सेवा-समितिः। अनया समित्या संकल्पितम्। यज्ञसेवा संयोजनीया। यज्ञसंस्कृतिः पुनरुज्जीवनीया। यज्ञ-संस्था-कल्पना शुद्धरूपेण सर्वत्र प्रसारणीया। अन्ततो गत्वा भव्यप्रमाणेन सेवायाः सर्वोत्तुङ्गशिखरत्वेन साधनीयम्––

### सो म या गा नु ष्ठा न म्।

तदेव वर्षद्वयात् पूर्वं भक्तोत्तमैः संकल्पितम् इदं सोमयागानुष्ठानं २८ फेब्रुवारी ६९ तः ५ मार्च १९६९ पर्यन्तं संपत्स्यते। लक्षचतुष्टय-जनैः संपादितः परिचयः यज्ञधर्मस्य एतावता। तेषां सर्वेषां सेवा तत्र साकारीभविष्यति। **सो म या गा नु ष्ठा न सं यो ज ने न।** प्रज्ञापुर-क्षेत्रस्थे ‘शिवपुरी’ संज्ञके नूतनतया निर्मिते यज्ञनगरे। प्रज्ञापुरम् (अक्कलकोट) ‘सोलापुर-’ रेलस्थानकात् २४ मैलदूरम्। मुम्बापुरी-पुण्यपत्तन-सोलापुर-नगरेभ्यः रेलयानेन चतुश्चक्रीयानेन (एस्. टी. बस) वा शक्यते तत्र गन्तुम्। यज्ञदर्शनार्थम् आगन्तुम् इच्छुभिः पूर्वसूचना प्रेषणीया। ‘शारदा’काराः सानन्दं तेषां स्वागतादिकम् संयोजयिष्यन्ति। श्रीसद्गुरुसेवासमिति-सदस्यत्वेन।

सर्वे प्रज्ञापुरम् आगच्छन्तु। तेषां हृदयमन्दिरे श्रद्धा-नन्दादीपः प्रकाशितः भवतु। परमपूज्य-परमसद्गुरु ‘श्री’चरणानां दर्शनकृपाप्रसादेन सर्वे धन्याः सन्तु। पवित्राः सन्तु। सुखिनः भवन्तु।

## ॥ म हा रा ष्ट्र-सं स्कृ त-प रि ष द् ॥

वसन्तसमयः प्राप्तः। प्रारब्धं कूजनं कोकिलानाम्। पुष्पिता आम्रलक्ष्मीः। प्रफुल्लिता वनश्रीः। जागृताः सर्वे साहितीकाराः। आराधनीया संप्रति साहित्यशारदा। वाङ्मय-मन्दिरं विविध-साहिती-पुष्पैः मण्डनीयम्। स्वान्तःसंतोषाय। परोपकाराय। शारदाम्बा-प्रसादनाय। अयं प्रतिभासमयः।

‘शारदा’कारैः संकल्पितम्। संनिहिते मधुमासे प्रज्ञापुरस्थे सोम-यागानुष्ठाने समर्पणीया काचन वाङ्मय-यज्ञ-सेवा। यथाशक्ति। यथामति। तदर्थम् एव तत्र संयोजिता विद्यते–– ॥ म हा रा ष्ट्र-सं स्कृ त-प रि ष द् ॥

(अग्रे तृतीये मलपृष्ठे...)

पुणें ) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया ( मुम्बई
शृङ्गेरी-शारदापीठ-श्री-शंकराचार्यैः संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता

सौर १ फागुन १८९०



# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् १० अङ्कः ८

वार्षिकमूल्यम् रू. ८ * अस्य अङ्कस्य रू. ०–८०

## अस्माकं प्रार्थना

समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि ॥

—( ऋ. १०-१९१-३ )

## हमारी प्रार्थना

— मन्त्र एक–सा हो इन सबका, होवे प्राप्ति समान;
— अन्तःकरण समान सभी के; सम विचार, सम ज्ञान ।
— तुम सबके हित मे अभिमन्त्रित करता मन्त्र समान,
– सम हविष्य से लिये तुम्हारे करता आहुति-दान ॥



## प्रज्ञापुरस्थे सोमयागे ऋत्विक्‌श्रेष्ठाः

| | | | |
|---|---|---|---|
| १ | सोमप्रवाकः | वे. एम्. आर् वेङ्कटेश श्रौती | नेल्लोर (आंध्र) |
| | | **अध्वर्युगणः** | |
| २ | अध्वर्युः | वे. अ. सी. विश्वनाथ श्रौती | नेल्लोर (आंध्र) |
| ३ | प्रतिप्रस्थाता | वे. विष्णुभट्ट सुब्रह्मण्य अवधानी | एलूरु (आंध्र) |
| ४ | नेष्टा | वे. गजानन सुब्रह्मण्य चित्रिगेमठ | गोकर्ण (कारवार) |
| ५ | उन्नेता | वे. एम्. शिवराम शर्मा | मद्रास (मद्रपुरी) |
| | | **ब्रह्मगणः** | |
| ६ | ब्रह्मा | वे. सुब्रह्मण्य गणेश श्रौती, कोडलेकेरे | गोकर्ण (कारवार) |
| ७ | ब्राह्मणाच्छंसी | वे. सांबदीक्षित दामोदरदीक्षित | गोकर्ण (कारवार) |
| ८ | आग्नीध्रः | वे. ए. एस्. रामकृष्ण श्रौती | मद्रपुरी (मद्रास) |
| ९ | पोता | वे. विष्णु गोविंद बांदेकर | अडवळ पाल (गोवा) |
| | | **होतृगणः** | |
| १० | होता | वे. केशव सीताराम जोगळेकर | गोकर्ण (कारवार) |
| ११ | मैत्रावरुणः | वे. महाबळेश्वर नागप्पा जोशी | गोकर्ण (कारवार) |
| १२ | अच्छावाकः | वे. फणीभट्ट सखारामभट्ट गोपी | गोकर्ण (कारवार) |
| १३ | ग्रावस्तुत् | वे. दिनकर बाळकृष्ण जोगळेकर | गोकर्ण (कारवार) |
| | | **उद्गातृगणः** | |
| १४ | उद्गाता | वे. डी. नरसिंह श्रौती | मद्रपुरी (मद्रास) |
| १५ | प्रस्तोता | वे. एस्. महालिंग श्रौती | मद्रपुरी (मद्रास) |
| १६ | प्रतिहर्ता | वे. टी. एन्. सुब्रह्मण्य श्रौती | मद्रपुरी (मद्रास) |
| १७ | सुब्रह्मण्यः | वे. ए. एस्. भवानीशंकर शास्त्री | मद्रपुरी (मद्रास) |
| १८ | सदस्यः | अलेवूरु सीतारामाचार्य | अलेवूरु (कारवार) |

# महाराष्ट्र-संस्कृत-परिषद् पञ्चमाधिवेशनम् १९६९
## प्रज्ञापुरम् ( अक्कलकोट-सोलापुर )

अध्यक्षः-डॉ. श्री. भा. वर्णेकरः प्रधानकार्यवाहः-पं. वसन्त अ. गाडगीळ

नमो नमः ।

परमसद्गुरु-श्रीगजाननमहाराजानां परमपवित्रे महासन्निधाने प्रज्ञापुरे सोमयाग-महायज्ञानुष्ठानं सुनिश्चितं फाल्गुन शु. १२ तः १५, १८९० ( २८ फेब्रुवारी १९६९ तः १, २, ३, ४ मार्च १९६९ ) इति दिन-पञ्चकम् । अस्यैव महायागस्य ज्ञानयज्ञाङ्गत्वेन महाराष्ट्र-संस्कृत-परिषदः पञ्चमाधिवेशनं मन्दे १ मार्च १९६९ तथा भानौ २ मार्च १९६९ इति दिनद्वयं संपत्स्यते ।

मन्दवासरे १ मार्च १९६९ सायं ४ तः ६-३०

शुभाशीर्मङ्गलम् – पू० गजाननमहाराज 'श्री' चरणाः ।
स्वागताध्यक्षः – श्रीमान् स. स. पारखे
उद्घाटकः – डॉ० हरिभाऊ पाटसकर
अध्यक्षः – डॉ० श्री. भा. वर्णेकर
वक्तारः – ख्यातकीर्तयः भारतीयाः पण्डितोत्तमाः ।

रात्रौ ९ तः ११-३० विद्वत्सभा – चर्चा - विषयः 'यज्ञ-संस्था'
भानुवासरे प्रातः ८-३० तः ११-३० प्रकटाधिवेशनम् ( प्रस्ताव-चर्चा )
मध्याह्ने ३ तः ६-३० — चर्चा – 'श्वेतपत्रिका संस्कृतं च ।'
रात्रौ ९ तः ११-३० – कविसम्मेलनं समारोपः च ।

अस्यां परिषदि समुपस्थातुं श्रीमन्तः साग्रहं प्रार्थ्यन्ते ।

भवदीयाः

| दाते धुण्डिराजशास्त्री | वसन्त अ. गाडगीळ | मर्दा रामचन्द्रः |
|---|---|---|
| स्वागत-मन्त्री | प्रधान-कार्यवाहः | स्वागत-कार्याध्यक्षः |

(स्वागतसदस्यशुल्कं रूप्यक-पञ्चकं, साधारणसदस्यताशुल्कं वा रूप्यकत्रयं महाराष्ट्र-संस्कृत-परिषद्, ४२५ सदाशिवपेठ, पुणें २ इति संकेतेन प्रेषणीयम् इति प्रार्थयामहे ।)

## भारतराजधान्यां प्रजासत्ताकदिनमहोत्सवः ।

नवदेहली ६-२-१९६९

प्रजासत्ताकदिनं नाम महानुत्सवकालो देहल्याम् । अस्य सिद्धता मासत्रयात्प्रागेव प्रारभ्यते । अस्माद्दिनात् पूर्वः सप्ताहः कार्यक्रमस्य पूर्वाभ्यास ( प्रॅक्टिस ) एव व्यत्येति । यत्र तत्र छात्रसैनिका बालवीरा वीरबालिकाः सैनिकाः सेनाधिकारिणो गृहरक्षका रणशकटाश्चाभ्यासमग्ना दृग्गोचरीभवन्ति राजपथपरिसरे । विविधानि वायुयानान्यपि दृश्यन्त आकाशे । चतुर्विंशे दिनाङ्के संपूर्णसंचलनस्य पूर्वाभ्यासः क्रियते । एवं महत्या सिद्धतया कृतं संचलनं नाम सुमहान् विशेषोऽस्य महोत्सवस्य । नितरां दर्शनीयं खल्विदं संचलनम् । अत एवास्य दिनस्य पूर्वं रात्रित एव जनसंमर्दो राजपथपरिसरे संमिलति । परःसहस्रं जना अस्य दर्शनार्थम् अविगणय्य शिशिरजाड्यं विहाय च निद्रासुखं सकलामपि रात्रिं रथ्यायां किंबहुना वृक्षशाखास्वपि गमयन्ति । प्रजासत्ताकदिनस्य प्रभाते च सर्वाण्यपि वाहनानि सर्वेऽपि च पदचारिणो राजपथस्य दिशैव गच्छन्तो दृश्यन्ते । न खलु कश्चिदपि विरुद्धदिशा गच्छन्नवलोक्यते । संचलनमेतत् प्रातः सार्धनववादनतः प्रारभ्यते शतघ्नीनिनादैः । किंतु प्रातः सप्तवादनत एव सुमहान् जनसंमर्दसागरो राजपथमभितः संमिलति । लक्षावधिजनानामीदृशं संमेलनं दुर्दर्शं स्याज्जगतीतले ।

संपूर्णस्यास्य संचलनस्य वर्णनं न हि शब्दैः कर्तुं शक्यते । अत एव सर्वेणापि भारतीयेनावश्यं सकृद् द्रष्टव्यमेतदितिसनिर्बन्धमुच्यते । भारतस्य वैभवस्य वैचित्र्यस्य वैविध्यस्य च यथार्थं दर्शनं भवत्यत्र । संचलनात्पूर्वं पुष्पकवायुयानतः पुष्पवृष्टिः क्रियते राजपथे । संचलनस्य प्रारम्भे विविधानां सेनाविभागानामुष्ट्राश्व-गज-नौदलादीनां चित्रगणवेषभूषिताः सैनिकाः शिस्तबद्धं संचलन्ति । अनेन सार्धं विविधानामस्त्राणां रणशकटानामपि च प्रदर्शनं क्रियते । अस्मिन् वर्षे भूमितोऽवकाशप्रक्षेपणास्त्रमपि प्रदर्शितं तत्रेत्यासीद्विशेषः । सेनाविभागानामनन्तरं गृहरक्षकबालवीरवीरबालिकादिपथकानामपि संचलनं भवति । तदनन्तरं विविधघटकराज्यसंस्कृतिनिदर्शकानां सुशोभितानां महाशकटानां संचलनं क्रियते । ऐषमो महाराष्ट्रशकटो ज्ञानेश्वरादि-प्रथितयशःसाधूनां वेषभूषाभूषितैर्जनैर्वृतेन सुमहता नीराञ्जनेन सुशोभित आसीत् । सर्वेषाम् अप्येतेषां महाशकटानां दर्शनं नेत्रवेधकम् आसीदिति निश्चप्रचम् एव । अस्य संचलनस्यान्ते वायुयानानामपि संचलनं भवति । अस्मिन् वर्षे परःशतं विविधानि वायुयानानि संमिलितान्यासन् संचलन इत्यप्यपरोऽस्य

विशेषः । राष्ट्रगीतवादनानन्तरं हैड्रोजनवायुपूरिताः परःसहस्रं त्रिरङ्गदृजय आकाशमपूपुरुः । जनसंमर्दगतैर्बालिकैश्च क्रीतास्त्रिरङ्गकर्गजध्वजा नर्तिताश्च स्वहस्तेषु ।

**रङ्गायनप्रदर्शिते 'मराठी' नाटके**

अस्मिन् वर्षे प्रजासत्ताकदिननिमित्तं मुम्बापुरीस्थ-रंगायननाटच-संस्थया विजय तेण्डुलकर-लिखिते द्वे नाटके अपि मराठीभाषायाम् अभिनीते । २६ तमे दिनाङ्के सायं चतुर्वादनावसरतः 'लोभ नसावा. ही विनंती' इति संज्ञकमाङ्ग्लीतोऽनूदितमेकमभिनवं नाटकमभिनीतम् । सैनिकजीवनविषयकस्यास्य नाटकस्य ब्रह्मदेशस्थमेकं सैनिकरुग्णालयमेव दृश्यम् । तथाप्यभिनयः संवादाश्च चेतोहरा आसन् । प्रेक्षकप्रतिक्रियावगमनार्थं विशेषतोऽभिनीयत एतदिति, निवेदितं लेखकेन । महाराष्ट्र-राज्यनाटचस्पर्धायां पारितोषिकं विजित्य प्रकटितमेव यश एतेन । अपरं त्वत्र सूच्यते यत्सीमासैनिकानपि दर्शयिष्यते चेदेतत्तेषामपि शोभनं मनोरञ्जनं भविष्यति । अपरं नाटकं 'शांतता कोर्ट चालू आहे' इति संज्ञकम् । २७ तमे दिनाङ्के सायं षड्वादनावसरतो नाटितमेतत् । अस्मिन् नाटके आदितोऽन्तपर्यन्तमेकस्थल एकसमयविहितैवैकैव घटना दर्शितेत्यस्य विशेषः । अरिस्तातलस्य ऐक्यत्रयस्य शोभनं खल्वेतदुदाहरणम् । अनेन नाटकेन प्रागेव बहुभिः प्रयोगैर्यशोऽर्जितमेव । देहलीस्थमहाराष्ट्रीया अपि नितरां प्रीता रङ्गायनाभिनयकौशलेन ।

युनियन पब्लिक सर्व्हिस कमिशन — डॉ. चिं. त्र्यं. केङ्घे
नवदेहली ११

# रामानुजीयो निर्विकल्पक-विचारः ।

अद्वैतवेदान्तिनः शाङ्करमतानुयायिनो निर्विकल्पकप्रत्यक्षाधारेण निर्विशेषं वस्तु साधयन्ति । तदसहमाना रामानुजा इतरशास्त्रकारैरङ्गीकृतं निर्विकल्पकप्रत्यक्षम् अन्यथा समर्थयन्ति । सर्वैः प्रामाणिकैः 'इदं किञ्चित्' इत्याकारकं निर्विकल्पकप्रत्यक्षम् अङ्गीक्रियते । अस्मिन् हि प्रत्यक्षे, वस्तुनो न कोऽपि विशेषोऽनुभूयते । किञ्चित्वधर्मोऽनुभूयते इति चेत्, यथाकथंचित् शब्देनोदाहर्तव्यमित्येव किञ्चिच्छब्दोपन्यासः । न तु तज्ज्ञानस्य किञ्चित्वप्रकारकत्वम् । प्रथमक्षणोत्पन्नज्ञाने न कोऽपि विशेषो भासते, इत्यस्मिन्नेवार्थे, 'इदं किञ्चित्' इति प्रयोगस्य तात्पर्यम् । एवं निर्विकल्पकप्रत्यक्षं विशेषरहितं वस्तु साधयति ।

रामानुजास्तु प्रथमक्षणोत्पन्ननिर्विकल्पकमपि ज्ञानं सविकल्पकवत् सविशेषविषयमेवेति प्रतिपादयन्ति । तेषां च मते निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ज्ञानं, न तु सर्वविशेषरहितस्य ज्ञानम्, सर्वविशेषरहितस्य ज्ञानानुभवात् । एवं प्रथमक्षणे अनुवृत्तिरहितस्य पिण्डस्य ज्ञानं भवति । तथापि तत् नामरूपजात्यादिविशेषमेव । तदेव च निर्विकल्पकम् । द्वितीयक्षणे तु गोत्वादेरनुवृत्तिसद्भावात्, यत् ज्ञानमुत्पद्यते तत्सविकल्पकम् । एवं रामानुजमते निर्विकल्पकप्रत्यक्षेण न निर्विशेषवस्तुसिद्धिः ।

अयं निर्विकल्पकशब्दस्य रामानुजकृतोऽर्थः विचारसहो न वेति विचार्यते । तथा हि—निर्विलपकं नाम विकल्पेन रहितम् । तत्र सामान्यतः विकल्पेन रहितमित्युक्ते, केनचिद्विकल्पेन रहितमिति सामान्यस्य विशेषे संकोचे, किंवा मानम् ? कस्यापि कुत्रापि सङ्कोचे कृते शास्त्रं बहुव्याकुलं कथं नाम न भवेत् । 'सत्यं वद' इत्यस्य कदाचित्सत्यं वद, कस्मिन्नपि विशिष्टविषये एव सत्यं वद, इत्येवंरूपेण सङ्कोचः किं प्रमाणभावमाप्नुयात् ? अतो निर्विकल्पकशब्दस्य सर्वविकल्परहितार्थत्वमेव स्वीकर्तव्यं भवति । अन्यच्च, विकल्पशब्दस्य अनुवृत्त्यर्थकत्वे किं नाम प्रमाणं विद्यते ? प्रत्युत विकल्पो नाम नामजात्यादिर्विशेष एव । तद्रहितं च निर्विकल्पकम् । एवं जात्यादिविशेषरहितमेव निर्विकल्पकम् । तेन च निर्विशेषवस्तुनः सिद्धिर्भवति ।

किं च, यदि केवलमनुवृत्तिसहितत्वम् अनुवृत्तिरहितत्वमित्येव प्रथमद्वितीयक्षणोत्पन्नज्ञानयोर्भेदः स्यात्, तर्हि निरनुवृत्तिकं सानुवृत्तिकम्, इत्येव व्यवहारो युक्तः, ननु निर्विकल्पकं सविकल्पकमिति । अन्यच्च द्वितीय-

क्षणोत्पन्नमपि ज्ञानं क्वचित् निर्विकल्पकं भविष्यति, रामानुजानां नये। यतः किल, यस्य मनुजस्य प्रथमप्रतीतिजन्यसंस्कारो नष्टः स्यात्, तस्य द्वितीय-प्रतीतावपि अनुवृत्तिर्न प्रतीयेत। तेन च तस्य ज्ञानस्य निर्विकल्पकत्वमापद्येत।

तथा च प्रथमक्षणे अनुवृत्तिर्न प्रतीयते, द्वितीयप्रतीतौ च सा प्रतीयत इत्यपि कथं नाम वक्तुं शक्यसंभवम्। यदि सा प्रथमप्रतीतौ न प्रतीयते, कथं तर्हि द्वितीयप्रतीतौ प्रतीयेत? अनुवृत्तत्वं चैकरूपेणानेकत्रावस्थानम्। तत्तु द्वितीयप्रतीतावपि कथं प्रतीयेत, पिण्डस्यैकत्वात्। अनेकेषु पिण्डेषु गृहीतेष्वेव तदनुवृत्तत्वम् अनुभूयेत, नान्यथा।

अपि च, वैशेषिकप्रणाल्या सामान्यलक्षणप्रत्यासत्त्या प्रथमप्रतीतावेव सकलगोव्यक्तिसम्बन्ध्यलौकिकप्रत्यक्षसद्भावात्, तेन चानुवृत्तिसत्त्वात्, प्रथमप्रतीतेरपि सविकल्पकत्वमापद्यते।

इत्येतैः कारणैः रामानुजस्वीकृतो निर्विकल्पकशब्दार्थो न स्वारसिक इति प्रतिभाति।

संगमेश्वर-महाविद्यालयः
सोलापूर

डॉ. रा. ल. जोशी

# अग्रे चल अग्रे चल

निश्चिन्तो रिपुकुपितः सज्जश्चल पौरुषभानो ।
अग्रे चल, अग्रे चल, अग्रे चल, सैनिकबन्धो ।। ध्रु० ।।

बलं त्वदीयं हस्तिदुर्लभं
युद्धकौशलं व्याघ्रजयकरं
शौर्यं नितरां लज्जितसिंहं
चित्रं तव चिन्तितमपि नामयते धैर्यसुमेरो ।। १ ।।

स्वेषां चिन्तां मा कार्षीस्त्वं
चितां परेषां रचय केवलं
रक्षिष्यामो मुदा त्वज्जनं
विस्मरेम स्वप्नेऽपि न वचनं स्वं सुकीर्तिसिन्धो ।। २ ।।

तव पत्नी नः अग्रजपत्नी
जननी नान्या, निजैव जननी
सुतः सुता ते नो भाग्यखनी
रिपुनाशादपरं ते मनसि मास्तु आप्तजनमृदो ।। ३ ।।

राष्ट्रस्यायं ममापकर्ता
इमं मूलतः अस्मि निहन्ता
अहं जीविता अयमेको वा
रणे रणे घोषस्तव उद्गच्छतु मानिजनेन्दो ।। ४ ।।

शत्रुं दग्धुं वाञ्छच्चित्तं
दष्टे ओष्ठे तप्तं रक्तं
स्फुरिते बाहौ वलयं सक्तं
जयो जयो नियतस्तव जयो जयो भारतसूनो ।। ५ ।।

कॅनडा

प्रा. अशोक अकलूजकर

## तुका म्हणे ४ तुकारामस्य निश्चयः

| | |
|---|---|
| आपुलिया बळें<br>नाही मी बोलत । | न हि स्वबलमात्रेण<br>समर्थोऽहं प्रभाषितुम् । |
| सखा कृपावंत<br>वाचा त्याची ॥ | सुहृद् यः सर्वभूतानां<br>कृपालुस् तस्य वागियम् ॥ |
| साळुंकी मंजुळ<br>बोलतसे वाणी । | कूजन्ति शारिका वाचं<br>मधुरां मधुराक्षराम् । |
| शिकविता धणी<br>वेगळाची ॥ | प्रभुरन्यो य एतासां<br>कुर्वन् आचार्यकं स्थितः ॥ |
| काय म्या पामरें<br>बोलावी उत्तरें । | प्रज्ञावादान् इमाम् वक्तुं<br>किं मन्दो मादृशः क्षमः । |
| परि त्या विश्वंभरें<br>बोलवीलें ॥ | विश्वंभरस्तु वागीशो<br>वाचालयति मामिति ॥ |
| तुका म्हणे त्याची<br>कोण जाणे कळा<br>चालवी पांगळा<br>पायावीण । | अपि पद्भ्यां विहीनं यः<br>सुखं संचारयत्यजः ।<br>गहना तस्य मायेति<br>तुकारामस्य निश्चयः ॥ |

तुकाराम — ग. बा. पळसुळे

## बाबा-ताहेर-काव्यम् ...४

खुदावंदा के बूषम् ताकें बूषम् । मज़हू पुर् अष्क खूनी ता कें बूषम् ॥
हमम् कज् दर् बरानन् सूत आयम् । तु कम् अज् दर् बरानी दा कें बूषम्॥
हे देव ! कोहं ? मम कः सहायः ? रक्ताश्रुपातस्य वदावधिः कः ॥
दूरीकृतोऽन्यैः शरणागतस्त्वाम् । त्यक्तस्त्वयाहं वद; यामि कुत्र ? ॥

१८-६-३१० गौळीपुरा
गौळा रामय्या वाडा हैद्राबाद २

गुण्डेराव हरकारे
निवृत्तः सत्रन्यायाध्यक्षः

# दक्षिणभारते गङ्गामाता

दिनाङ्क २७।१।६९ ।। श्रीः ।। श्रीकृष्णमठः

आयुष्मते गिरीशाय शिरीषाय स्वस्ति । उडुपी (मैसूर)

गुरौ (२३।१।६९) प्रातः डेक्कन-एक्स्प्रेस-यानेन प्रस्थितः प्राप्तः हुबळी-स्थानकं रात्रौ ९-१० वादने। सौ. शान्ता काळे गृहे भुक्त्वा विश्रामं च स्वीकृत्य प्रातः ४ वादनसमये पुनः प्रविष्टः बेङ्गलोर एक्स्प्रेसयानम् । अद्भुतः तत्र चमत्कारः साक्षात्कृतः ।

भारतवर्षस्य श्रद्धानिधानं भगवती गङ्गामाता उत्तरभारतं विहाय दक्षिणभारतं प्रस्थिता मम पुरस्तात् समुपस्थिता। बेङ्गलोर-एक्स्प्रेस-याने गङ्गाप्रवाह-दर्शनम् । अद्भुतम्। परं तत् सत्यम् । प्रत्यक्षं मया अनुभूतम्। अनेन गङ्गादर्शनेन अहं प्रसन्ने तस्मिन् उषःकालपूर्वे 'प्रतिभा'-समये पवित्रितः। अहो मम भाग्यम्। अहो मे धन्यता। अहो मे पुण्यलाभः ।

वाराणसीवास्तव्याः पण्डितराज द्राविड राजेश्वरशास्त्रिगुरुचरणाः तत्र याने प्रवासपराः । तेषां शिष्योत्तमाः न्यायाचार्याः पं. हरेरामशास्त्रिणः, पुत्ररत्नत्रयं (१) वीरेश्वर १९, (२) विश्वेश्वर १७, (३) गणेश्वर १०,—एतेषां सर्वेषां विद्याव्रतानां रूपेण विद्यागङ्गाप्रवाहः स्वयम् अनुभूतः । तत्र मया यथेच्छं सुखं स्नातम् । 'विद्या रसनाग्र-नर्तकी' इत्यस्य प्रत्यक्षप्रमाणं लब्धम्। माध्वीर्गावो भवन्तु नः। (अस्माकं वाणी सदैव मधुरा भवतु)-इत्यस्य यथार्थता ज्ञाता । विद्यागङ्गायाः निर्मले, प्रसन्ने, प्रशान्ते च प्रवाहे मम अवगाहनम् इदं जन्मजन्मान्तरभाग्येन मया लब्धम् इति मे श्रद्धा । तस्मिन् दिने मध्याह्ने, नहि नहि-अपराह्णे पञ्चवादनपर्यन्तं गङ्गाप्रवाहे प्रवासः अयम्। तदनन्तरम् अपि पूर्वं सहप्रवासी अद्य यावत् तेषां सहनिवासी संजातः अस्मि। कथं वर्णनीयं मे विद्याभाग्यम् । भगवती-शारदाम्बाकृपया एव लब्धम् इदं सर्वं लोक-विलक्षणभाग्यम् । अविस्मरणीयम् । संस्मरणीयम् । अतः अयि प्रियपुत्रक-द्वय ! वद संस्कृतम् । चर संस्कृतम् । स्वप्नान् अपि संस्कृतमयान् पश्य । अधिकं पत्रान्तरे । सर्वेभ्यः प्रणामाः ।

—बाबा

दिनाङ्क २९।१।६९ अशोक हॉटेल

॥ श्रीः ॥ हुबळी

आयुष्मते स्वस्ति ।

भगवान् श्रीकृष्णः । राष्ट्रप्रियः परमेशः । तस्य विविधानि तीर्थ-क्षेत्राणि । द्वारका, मथुरा, वृन्दावनम् इत्यादीनि उत्तरभारते । दक्षिण-भारते प्रमुखं श्रीउडुपीक्षेत्रम् । श्रीमध्वाचार्यैः स्थापितः मूलविग्रहः (प्रतिमा) श्रीकृष्णस्य उडुपी-क्षेत्रे विराजते । प्राचीनम् इदं मन्दिरम् । ७०० वर्षैः पुराणम् । अस्य मन्दिरस्य परितः अष्टमठाः । तत्र पेजावर-मठस्य श्रीकृष्णपूजायां संप्रति विशेषाधिकारः। अष्टमठानां प्रत्येकं वर्ष-द्वयम् पूजाधिकारः। 'पर्यायः' इति तस्य विशेषसंज्ञा । पेजावरपीठाधीशाः श्रीविश्वेशतीर्थ 'श्री'चरणाः कुशलसंघटकाः । चतुराः संयोजकाः । शास्त्रविद्यासु विशेषाधिकारिणः । तैः सांप्रतिके माध्वनवमी-महोत्सवे संयोजितं भारतीयविदुषां संमेलनम् । वैदिकानां शास्त्रिणां च शतकद्वयम् उपस्थितम् । पण्डितराज-द्राविड-राजेश्वरशास्त्रिणः तत्र प्रमुखाः । तेषां शिष्योत्तमाः न्यायाचार्याः पं. हरेरामशास्त्रिणः । गुरुशिष्ययोः पर-स्परं स्नेहभावः लोकविलक्षणः । तस्य साक्षात्कारेण महती मे धन्यता । पेजावरपीठ 'श्री'चरणैः सत्कृताः सर्वे पण्डिताः । १०० (शत) मुद्रातः २००० (सहस्रद्वय) मुद्रापर्यन्तं द्रव्यं दत्वा । एतादृशाः विद्याव्रताः । एतादृशाः विद्यापूजकाः । सर्वम् इदं दुर्लभम् । अदृष्टपूर्वम् । तस्य दर्शनेन धन्यः अहम् । पुण्यः अहम् । पवित्रितः अहम् । पूर्वपुण्येन एव इदं सर्वं संपन्नम् । सुसंपन्नम् । अविस्मरणीयम् । संस्मरणीयम् ।

पण्डितराज राजेश्वशास्त्रिणः वीरेश्वर-विश्वेश्वर-गणेश्वर-इति पुत्रत्रयेण सह प्रस्थिताः गतदिने मद्रराज्यं प्रति । तेषां शिष्योत्तमैः न्यायाचार्यैः पं. हरेरामशास्त्रिभिः सह । डॉ. राजाभाऊ (तथा सौ. डॉ. प्रभा) मित्रवरैः च सह अहं प्राप्तः हुबळीम् अद्य प्रातः ३-३० वादने । 'अशोक हॉटेल'मध्ये स्नानं कृतम् । धारवाडनगरीं गत्वा पू. दीक्षित-मार्तण्डशास्त्रिगुरुचरणानां गृहे समुपासिता संध्या मध्याह्ने । तत्रैव फलाहारं कृत्वा पुनः प्राप्तः हुबळीम् । न्यायाचार्याः पं. हरेरामशास्त्रिणः गताः सन्ति 'पूना मेल' यानेन पुण्यपत्तनम् । तथा सप्रभाकाः डॉ. राजाभाऊ जोशी षोडशपुरम् । अहम् अधुना एकाकी । रात्रौ 'अशोक-हॉटेल' विश्रामस्थलम् । प्रातः (गुरौ ३०।१।६९) आरामबसयानेन गोमन्तक-राजधानीं गमिष्यामि । तव मातुः संतोषाय विशेषप्रसादम् आनेष्यामि । प्रार्थ्यताम् 'अलं कोपेन' इति । ती. मामा-मामी थत्ते, प्रतिभा-सुधा-प्रभृतिभ्यः नमोनमः ।

—बाबा

# संस्कृतं सर्वदा जीवन्ती भाषा

"मराठ्याः संदर्भे संस्कृतं विभिन्ना भाषा" इति नास्ति मे सम्मतम्। लॅटिन-ग्रीकवत् सा मृता भाषा इत्यपि न अहं मन्ये। सा खलु सर्वदा जीवन्ती प्रचलिता भाषा एव। सर्वाः संस्कृतोद्भवाः भाषाः अनेकदा ताम् एव सर्वथा आश्रयन्ते। इतः उत्तरम् आङ्ग्ल्याः महत्व-ह्रासे संस्कृताश्रयः सर्वासाम् अनिवार्यः तथा अपरिहार्यः स्यात्। विस्मृत्य इदं सत्यं, वयं तां मृतकल्पां विधातुं प्रयत्नशीलाः इति सखेदं वक्तव्यं भवति। अस्य फलम् अद्य यद्यपि न तादृक् दृष्टिगोचरं भवति तथापि अचिरेणैव दृश्येत। तेन च मराठी तु स्वयं दुर्बला भवेत् एव परं यस्याः व्यापिकायाः एकसंधायाः भारतीयसंस्कृतेः रिक्थभाजम् आत्मानं मन्यामहे सा एव जीर्णशीर्णा संभवेत् कालेन।

राष्ट्रैक्यं घोषणया केवलया नैव साध्यं भवेत्। संस्कृतस्य आधारेण एव तत् सर्वथा सुसंपन्नं स्यात्।

"संस्कृतं कठिनं क्लिष्टम्, आधुनिके युगे न तावत् उपयुक्तं, बहुजनसमाजे शिक्षायाः व्याप्तौ च अन्तरायभूतम् इति प्रायेण विषये अस्मिन् प्रस्तूयते बहुभिः। वस्तुतः तु संस्कृतं न केवलम् एका भाषा एव, अपि तु सा परिवर्धिता विचारसरणिः। स्वच्छः (निर्मलः) तर्कशुद्धः च विचारः कथं कर्तव्यः, साहित्यस्य रूपं कथं साधनीयम् इति विषये संस्कृतगताः नियमाः पद्धतिः च तदाश्रितानां भाषाणाम् अविरतं मार्गदर्शकाः सिद्धाः सेत्स्यन्ति च।"

"बहुजनसमाजः संस्कृतस्य लाभे अक्षमः असमर्थः वा अस्ति स्यात् वा इति कथने (संस्कृतस्य कठिनक्लिष्टतापेक्षया) समाजे एव तस्मिन् अन्यायः अधिक्षेपः चापि अकारणं कृतः भवति। यतः एवं विकासस्य एकया दिशा सः वञ्चितः तिष्ठति इति अन्यायः, तस्य समाजस्य बुद्धिमत्ता च किमपि न्यूनतरा कल्प्यते इति अधिक्षेपः। इति पर्यायेण सम्मतं भवति वक्तृणाम्।"

कठिनं, क्लिष्टम् अपि संस्कृतम् अन्तराय-दूरीकरणेन विकासोत्सुकस्य समाजस्य प्रयत्नतः सुसाध्यं यथा स्यात् तथा प्रवर्तितव्यम्, न खलु तस्य सर्वथा त्यागेन समाधातव्यम्। वस्तुतः संस्कृतं तथा कठिनं क्लिष्टं नास्ति यथा तत् अपठद्भिः कथ्यते। विदेशीयानाम् अत्र निदर्शनं सुलभम्। बहुजनसमाजः तु स्वदेशीयः (भारतीयः) एव न खलु सर्वम् एव ज्ञानं सुलभं भवति।

मराठी-साहित्य-संमेलनाध्यक्षः, वर्धा  प्रा. पु. शि. रेगे

## गोमन्तक-प्रमोदयात्रा

भवतां विरामकालः प्रदीर्घः भवतु स्वल्पः वा, श्रमत्कः आयव्यय-संकल्पः महीयान् भवतु लघीयान् वा, श्रीमतां गोमन्तक-प्रमोद-यात्रा प्रमोददायिनी भवेद् एव इति सुदृढः अस्माकं विश्वासः ।

गोमन्तकशासनेन पर्यटन-विभागद्वारा सौख्यवैविध्यं सुलभीकृतं श्रीमतां कृते ।

* प्रेक्षणीय-स्थलदर्शनार्थं यानविशेषाः ।
* यानेन सह प्रशिक्षितः मार्गदर्शकः ।
* माण्डवी-नदी-पात्रे जलक्रीडा ।
* जलोपरितरणक्रीडनार्थं (वॉटरस्कीईङ्ग) वेगवन्ति नौयानानि ।
* पणजी तथा कळङ्गुट इत्यत्र अत्याधुनिकानि निवासस्थानानि ।
* इदं सर्वं स्वल्पव्ययेन स्वल्पसमयेन च संपादयितुं स्वर्णावसरः नाम ।

* ॥ गोमन्तकप्रमोदयात्रा ॥ *

( गोवा-दीव-दमण-शासनस्य सूचना-पर्यटन-विभाग-द्वारा प्रकाशितम् )

---

बौद्धिकं मानसं चैव श्रमाधिक्यं यदा भवेत् ।
उत्साह-लाभ-वृद्ध्यर्थं सेव्यताम् **प्रशमं** सदा ॥
जीवनसत्त्व-युक्तं (ब–१) दिव्यौषधं

## प्रशम

सर्वप्रकारकः कासः 'खोकला' नाम–विश्रुतः ।
सत्वरं तस्य नाशार्थं गुणवत् कासनाशकम् ॥

## कासनाशक

आयुर्वेदीयौषधीनां शास्त्रशुद्धा विनिर्मितिः ।
निःशङ्कं निश्चिता यत्र **रसशाला** हि सा ध्रुवम् ॥

## दी आयुर्वेद रसशाला

## पुण्यपत्तनम् ४

**शाखा**

पुणें-सांगली-कोल्हापुर-बेळगांव-हुबळी-मुम्बई-अमरावती
नागपुर-इन्दौर-जोधपुर-दिल्ली

# धर्मनिर्णयमण्डल—पञ्चाङ्गम् शके १८९१

धर्मनिर्णयमण्डलेन प्रकाशितं पञ्चाङ्गम् इदं ज्योतिष्यके धर्मशास्त्रे च नितरां विचारचालनाचातुरीं प्रदर्शयति। भारते सामान्यतः पञ्चाङ्गानि निरयनसरणीम् अनुसरन्ति। परम् इदं पञ्चाङ्गं सायनम् एव वर्षं मुख्यं मनुते। तत्र तैत्तिरीय-संहितादिग्रन्थस्थानि प्रमाणानि अपि अत्र पञ्चाङ्गे २२ तमे पृष्ठे समुद्धृतानि विद्यन्ते। तत्र शतपथ-गोपथादिब्राह्मणवचनानि अपि उद्धृतानि सन्ति। शारदापीठशंकराचार्याणां पुरातनानाम् आज्ञापत्रं लोकमान्य-तिलक-केतकरादीनाम् अपि संमतिं प्रदर्श्य प्राचीनग्रन्थेषु सर्वत्र सायनवर्षम् एव प्रमाणीकृतं दृश्यते न पुनः निरयनम् इति अपि साटोपं प्रतिपादितम् अत्र पञ्चाङ्गे। देशकालानुसारतः सुलभम् अशौचं प्रतिपादितम्। मासद्वयात् पूर्वं दिल्लीनगरे संवृत्तः पञ्चाङ्गपरिसंवादः अपि अत्र विवृतः वर्तते। स्थिरायनांशीयं धोरणं शासनेन कियत्कालपर्यन्तम् अनुसर्तव्यम् इत्यपि प्रदर्शितम्। 'सर्वे मासा विवाहस्य' इति निदेशम् अनु मलमासे अपि विवाहमुहूर्ताः प्रदर्शिताः। विचारक्षेपकानि अपि सन्ति कानिचित् प्रमेयानि प्रतिपादितानि पञ्चाङ्गे अस्मिन्। १६ संख्यामितानि प्रमेयानि तादृशानि २३ तमे पृष्ठे निर्दिष्टानि वर्तन्ते। पञ्चाङ्गसुधारेच्छुकानां पञ्चाङ्गैक्याभिमानिनां च कृते सर्वथा परिशीलनार्हम् एतत् पञ्चाङ्गं मराठी-भाषायां प्रकाशितम्।

## पञ्चाङ्ग-संपादक-मण्डलम्

| | | | |
|---|---|---|---|
| कृ. वि. सोमण, | मुम्बई | रघुनाथशास्त्री कोकजे, | लोणावळा |
| कृष्णराम भट्ट, | ,, | गंगाधर रा. देव, | नागपुर |
| य. के. प्रधान, | ,, | ग. अं. त्रिवेदी, | मुम्बई |
| वसन्तकुमार पण्डित | ,, | दत्तात्रेय कृ. सुळे, | ,, |
| नीलकण्ठ स. गोखले | पुणे | चि. दा. भानुवंशे | ,, |

प्रकाशनम्-धर्मनिर्णयमण्डलम्, लोणावळें (पुणें-महाराष्ट्रराज्यम्)

पृष्ठसंख्या २४.  मूल्यम् रू. ००-६० पणा

संपादकः मुद्रकः प्रकाशकः स्वामी — वसन्त अनन्त गाडगीळ

मुद्रणस्थलम्— यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.

प्रकाशनस्थलम्-१.- म.म. प्रा.द.वा.पोतदार,४९८ शनिवार,पुण्यपत्तनम् २

२.— श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४

कार्यालयः— खजिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.

( .. द्वितीय-मलपृष्ठात् )

# महाराष्ट्र-संस्कृत-परिषद्

प्रज्ञापुरे यागस्य अङ्गत्वेन एव परिषदः पञ्चमम् अधिवेशनम्। १ तथा २ मार्च १९६९ इति दिनद्वयम्। सभापतित्वं तत्र 'शिवराज्योदय'-महाकाव्य-काराणां डॉ. श्री. भा. वर्णेकर इत्येतेषाम्। उद्घाटकाः डॉ. हरिभाऊ पाटसकराः। तत्र वक्तारः पं. वामनशास्त्री भागवत, पं. मार्तण्ड चिदम्बर दीक्षित, विद्यावाचस्पति पं. दत्तात्रेयशास्त्री कवीश्वर, पं. त्या. सु. श्रीनिवासशास्त्री, पं. शिवरामकृष्णशास्त्री, पं. हयग्रीवाचार्य, डॉ. हरिभाऊ दिवेकर, पं. गणेशशास्त्री शेण्डचे, प्राचार्य दि. वि. वऱ्हाडपाण्डे, डॉ. राजाभाऊ जोशी प्रभृतयः। यथा भारतीयानां तथा वैदेशिकानाम् अपि तत्र उपस्थितिः। परिसंवाद-द्वयम्। 'यज्ञसंस्था'-विषये प्रथमः। द्वितीयः च 'श्वेतपत्रिका संस्कृतं च' इति विषये।



डॉ. श्री. भा. वर्णेकर

संप्रति संस्कृत-समाजस्य प्रबोधनम् अत्यावश्यकम्। आत्मसंतुष्टवृत्त्या, उपेक्षाबुद्ध्या, आलस्याधिक्येन, निष्क्रियतया घातिताः वयम्। पातिताः वयम्। हतप्राया वयम्। तेनैव संस्कृतं दुरवस्थाम् अनुभवति। संस्कृत-समाजः नगण्यतां साक्षात्करोति। इदं चित्रं परिवर्तनीयम्। उत्साहशक्तिः संपादनीया। संघे शक्तिः कलौ युगे। कार्यस्थ गठनं, संस्कृतसेवकानां च संघटनं कर्तव्यम्। संस्कृतहितविरोधिनां निःपातार्थं शतघ्नी संयोजनीया। दशसु दिक्षु मधुरवाणी–वीणा–झङ्कारः प्रापणीयः। तदा एव शक्यम् इदम्। यदा वयं—

'संगच्छध्वं संवदध्वं। सं वो मनांसि जानताम्'—

इति महर्षिप्रणीतां सर्वाद्यवेदवाणीम् अनुसरामः।

अत एव अयि संस्कृतसेवकाः।

**उत्तिष्ठत ! जाग्रत ! प्राप्य वरान् निबोधत ।।**

शतं विहाय सर्वे समागच्छन्तु प्रज्ञापुरम्। यशस्विनी च भवतु—

॥ महाराष्ट्र-संस्कृत-परिषद् ॥

शारदा–(पुण्यपत्तनम् २.) १०:८ ★ रजि. क्र. एम्. एच्. ५५७
● लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.

# मद्र-केरल-मैसूरेषु शृङ्गेरी- 'श्री '-विजययात्रा



**फेब्रुवारी १९६९**

१८ मद्रासतः प्रस्थानम्
१९ टिण्डिवनम्
२० वृन्दाचलम्
२१ तिरुचिरापल्ली
२२ " "
२३ डिण्डिगल
२४ टेङ्करराई
२५ मदुराई
२६ मदुराई
२७-२८ तिरुनेल्वेली

**मार्च १९६९**

१ नागरकॉईल
२ त्रिवेन्द्रम्
३ त्रिवेन्द्रम्
४-५ अलेप्पी
६ तः ८ कालटी
९ पालघाट
१० तः १२ कोइम्बत्तूरु
१३ करूर
१४ तः १७ सालेम
१८ इरोड
१९ गोपीचेट्टीपलयम्
२० " "
२१ सत्यमङ्गलम्
२२ नञ्जनगुडु
२३ तः २५ मैसूर
२६ हसन
२७ तः ३० टिपटूर
३१ चिक्मङ्गलूर

